पकारेण रुधादित्वं भवति रुधादित्वाच्च नागमो भवति । १४७३ रिचूंपी (रिचू) विरेचने रुधां स्वरादिति श्ने रिणक्ति किन्तु रुधादौ तागमे पोहि-इति पाठः सम्यक्-तस्येयं व्याख्या पकारो रुधादिघटकः प्रकारानुबन्धेन धातूनां रुधादित्वं भवतीति भावः, प्रत्ययस्थपकारानुबन्धः तागमप्रयोजकः- (ह्रस्व-इत्यादिना क्यपि 'ह्रस्वस्य तः पित्कृति' तागमे आहृत्य प्राहृत्य इति, मो मकारः, दामः सम्प्रदानेऽधर्म्ये आत्मने च इत्यत्र विशेषणार्थः । दास्या सम्प्रयच्छते कामुकः । यो यकारः तनादेः सूचकः । १५०१ क्षणूग्री ( क्षण् ) हिंसायाम् । यित्त्वात् कृग्तनादेरित्यौ च तनुते । रकारः पुंवद्भावरूपो योऽर्थस्तत्सूचकः । पट्वी पकारोऽस्याः पटुजातीया । प्रकारे जातीयरिति जातीयरि प्रत्यये रितीति पुंवद्भावः । लकारो स्त्रीलिङ्गार्थः। जनानां समूहो जनता अत्र तल्प्रत्ययस्य लित्त्वात्स्त्रीत्वम् । वकार उत और्वितिव्यञ्जनेऽद्वेरित्यत्र विशेषणार्थः १०७७ धुंक्(ग्रु) अभिगमने । द्यौति। शकारो यदि स्यात्तदा क्र्यादिः स्यात् । १५०७ षिग्रुश् ( सि ) बन्धने । शित्त्वात्क्र्यादित्वेन क्र्यादेरिति श्नाप्रत्यये सिनाति । क्यःशितीत्यत्र विशेषणार्थः । भूयते अत्र भावकर्मविहिते शिति क्यः । षकारःषितोऽङ् इत्यत्र विशेषणार्थः । ८९२ डुपचींष्(पच्) पाके । पच्यतेऽसाविति पचा । सकारः पदत्वार्थे पदत्वप्रयोजकः । भवतोरिकणीयसौ,इतीयसि नामसिदय्व्यञ्जने-इति पदत्वे धुटस्तृतीय इति दत्वे भवदीय इति येऽनुबन्धतया नोक्तास्तेऽनुबन्धा न सन्ति । अनुबन्धास्तु इयन्त एव ।अपि तु अत्रानुबन्धानां यद्यत्फलमुक्तं तेन प्रयोजनान्तराण्यप्युपलक्ष्यन्ते । यथा टकारस्य प्रयोजनं स्वादित्वमेवोक्तं तथापि २८ ट्धें (धे) पाने । अत्र टकारःशुनिंधयीत्यादौ ङ्यर्थः । एवं डकारस्यान्त्यस्वरलोपप्रभृतिप्रयोजनं स्वयमूह्यम् ।

## अत्रार्थेऽन्येऽपि कतिचित्श्लोकाः

अदादयः कानुबन्धाश्चानुबन्धा दिवादयः
स्वादयष्टानुबन्धा-स्तानुबन्धास्तुदादयः ॥ १ ॥

रुधादयः पानुबन्धा यानुबन्धास्तनादयः ।
क्र्यादयः शानुबन्धा णानुबन्धाश्चुरादयः ॥ २ ॥

॥ इत्यनुबन्धफलप्रतिपादकप्रकरणम् ॥

## ॥ वृतुगणफलनिरूपणम् ॥

द्युतादेरद्यतन्यां वाऽङात्मनेपदमिष्यते
वृदादिपञ्चकेभ्यो वा स्यसनोरात्मनेपदम् ॥ १ ॥
ज्वलादेर्णो विकल्पेन यजादेः संप्रसारणम् ।
घटादीनां भवेद्ह्रस्वो णौ परेऽजीघटत् सदा ॥ २ ॥
अद्यतन्यां पुषादित्वादङ् परस्मैपदे भवेत् ।
स्वादित्वाच्च क्तयोस्तस्य नकारः प्रकटो भवेत् ॥ ३ ॥
प्वादीनां भवेद्ह्रस्वो ल्वादेस्क्तयोश्च नो भवेत् ।
युजादयो विकल्पेन ज्ञेयाश्चुरादिके गणे ॥ ४ ॥
मुचादेर्नागमः शे च कुटादित्वात्सिचि परे ।
गुणवृद्धेरभावश्च कथितो हेमसूरिणा ॥ ५ ॥
अदन्तानां गुणो वृद्धिर्यङ् चुरादेश्च नो भवेत् ।
संक्षेपेण फलञ्चैतज्ज्ञेयं सूत्रानुसारतः ॥ ६ ॥

वृत् गणानामान्तर्गणास्तेषामान्तर्गणकरणे यत्फलं तदुच्यते । द्युतादेर्द्युतादिगण-।ठितधातोरद्यतन्यामङ्आत्मनेपदश्च वा भवति । अर्थात्-द्युतादिगणस्य फलम-द्यतन्यां विकल्पेनाऽङात्मनेपदभवनम् । ९३७ द्युति ( द्युत् ) दीप्तौ । द्युद्-भ्योऽद्यतन्यामित्यात्मनेपदिनोऽपि विकल्पनात्पक्षे शेषात्परस्मायिनि परस्मैपदे लृदिद्द्युतादीत्यङिः अद्युतत् । पक्षे अद्योतिष्ट । वृदादिपञ्चकेभ्यो वृदादेः पञ्चतः स्यसनोः स्यादौ प्रत्यये सनि च विषये आत्मनेपदं वा भवति । अयं वृदादिर्द्यु-ताद्यन्तर्गणस्तेन द्युतादिफलन्तु अत्येव तदतिरिक्तमिदं ज्ञेयम् । ९५९ वृतूङ् ( वृत ) वर्त्तने । अवृतत । अवर्त्तिष्ट । वृद्भ्य इति स्यसनोर्विषये वात्मनेपदमात्म-नेपदाभावे च न वृद्भ्य इति नेट् । वर्तिष्यते, वर्त्स्यति, अवर्तिष्यत, अवर्त्स्यत् । सनि विवृत्सति विवर्तिषते । ज्वलादेर्णः प्रत्ययो विकल्पेन भवति । ९६० ज्वल ( ज्वल् ) दीप्तौ । वा ज्वलादीति णे ज्वालः । पक्षे ज्वलः । यजादेर्यजादिग-

णस्य फलं सम्प्रसारणं स्मृतम् । ९९१ यजीं ( यज् ) देवपूजासङ्गतिकरणदानेषु । यजादिवशिति पूर्वस्य स्मृति इयाज । यजादिवचेरिति स्मृति ईजे । घटादीनां फलं तु णौ णिप्रत्यये परे ह्रस्वः । १००० घटिष् (घट्) चेष्टायाम् । घटादेरिति-ह्रस्वे । घटयति । (णौ परेऽजीघटत् सदा) अयं भावः'जासनाटक्राथपिषो हिंसायां इत्यत्र क्राथेत्याकारोपान्त्यनिर्देशादाकारश्रुतावस्य प्रवृत्तेः चौरस्योत्क्राथयतीति घ-टादेर्ह्रस्व इति ह्रस्वत्वाभावः । अद्यतन्यां तु ह्रस्वघटितमेव रूपं भवति इति अजीघटत्सदेत्यनेन सूचितमिति क्राथेरपि उदचिक्रथादिति ' उपान्त्यस्य ' इति ह्रस्वस्तु न निषिध्यते यस्मिन् प्राप्त एवेति न्यायादिति । पुषादित्वाद-द्यतन्यां परस्मैपदेऽङ् भवति । दिवाद्यन्तर्गणपुषादिगणस्य फलं परस्मैपदेऽद्यत-न्यामङ् प्रत्ययभवनमित्यर्थः । ११७५ पुषंच् ( पुष् ] पुष्टौ । लृदिदिति अङि अपुषत् । स्वादित्वात् दिवाद्यन्तर्गणस्वादिगणपठितत्वात् क्तयोस्क्तक्त-वतुप्रत्यययोस्तकारस्य नकारो भवति । १२४१ षूङौच् ( सू ) प्राणिप्रसवे । सूयत्यादीति क्तयोस्तस्य नत्वे सूनः सूनवान् । प्वादीनां क्र्याद्यन्तर्गणप्वादिग-णपठितधातूनां ह्रस्वो गदितः । १५१८ पूग्श् ( पू ) पवने । प्वादेरिति ह्रस्वे पुनाति पुनीते । ल्वादेः क्र्याद्यन्तर्गणप्वान्तर्गणल्वादिगणपठितधातोस्क्त-योस्तस्य नो भवेत् । १५१९ लूग्श् [ लू ) छेदने । ऋल्वादेरिति क्तक्तीनां तो नत्वे लूनः लूनवान् लूनिः । युजादयो युजादिगणपठिता धातवश्चुरादिगणे विकल्पेन ज्ञेयाः । चुराद्यन्तगणयुजादिगणस्य फलं विकल्पेन णिच्ग्रहणमित्यर्थः । १९४२ युजण् [ युज् ) सम्पर्चने । युजादेरिति वा णिचि योजयति । पक्षे न्यायविकरणः शव् योजति । मुचादेस्तुदाद्यन्तर्गणमुचादिगणस्य फलं शे प्रत्यये नागमः । १३२० मुच्लृन्ती ( मुच् ) मोक्षणे मुचादीति स्वरात्परे नेन्ते मु-ञ्चति, मुञ्चते । कुटादित्वात् तुदाद्यन्तर्गणकुटादिगणपठितत्वात् सिचि परे गुण-वृद्ध्यभावः ।यथा १४२६ कुटत् [कुट्) कौटिल्ये । कुटादेरिति ङित्त्वात् गुणाभावे सिचि अकुटीत् । १४२९ णूत् [ णूत् ) स्तवने । कुटादेरिति ङित्त्वात् सिचि परस्मायिति वृद्ध्यभावे अनुवीत् । चुरादेरदन्तानां चुरादिगणपठितादन्तधातू-

नामित्यर्थः । गुणो वृद्धिश्च न भवेत् । सुखण् ( सुख् ) तत्क्रियायाम् । १८९४ रचण् ( रच् ) प्रतियत्ने । रचयति । अत्रात इत्यल्लुकः स्वरादेशत्वेन स्थानिवत्त्वाद् गुणवृद्ध्यभावः । अररचत् । असुसुखत् । अत्र समानलोपित्वादसमानलोप इति पूर्वस्य सन्वद्भावो लघोर्दीर्घ इति दीर्घश्च न भवति । १८९५ सूचण् ( सूच् ) पैशून्ये अत्रोपान्त्यह्रस्वाभावः ॥

## ॥ इति वृतुगणफलनिरूपणम् ॥

## ॥ सकर्मकवाकर्मकत्वानिरूपणम् ॥

फलव्यापारयोरेक — निष्ठतायामकर्मकः ।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ १ ॥

फलस्य गतिनिवृत्त्यादिरूपस्य व्यापारस्य गतिनिवृत्त्यनुकूलव्यापारादिरूपस्य च एकनिष्ठतायामेकाधिकरणवृत्तितायां सत्यां धातुरकर्मको भवति । फलसमानाधिकरणव्यापारबोधकत्वं समानाधिकरणफलावच्छिन्नव्यापारबोधकत्वं वाकर्मकत्वमिति फलितोऽर्थः । यथा पष्ठां ( स्था ) गतिनिवृत्तौ अत्र फलं गतिनिवृत्तिः व्यापारस्तदनुकूल इति फलं व्यापारश्चोभयं देवदत्तस्तिष्ठति इत्यत्र देवदत्तरूपैकाधिकरणे वर्त्तते । देवदत्तस्तिष्ठतीति कोऽर्थः ?, गतिनिवृत्त्यनुकूलव्यापारवान् देवदत्तः । एवं तयोः फलव्यापारयोः धर्मिभेदेऽधिकरणभेदे भिन्नभिन्नाधिकरणवृत्तितायां सत्यां धातुः सकर्मको भवति । फलव्यधिकरणव्यापारबोधकत्वं व्यधिकरणफलावच्छिन्नव्यापारबोधकत्वं वा सकर्मकत्वमिति फलितोऽर्थः । यथा ८९२ डुपचींष् ( पच् ) पाके । देवदत्तस्तण्डुलान् पचति । कोऽर्थः ? तण्डुलनिष्ठविक्लृत्यनुकूलव्यापारवान् देवदत्तः । अत्र फलं विक्लृतिः सा तण्डुलेषु वर्त्तते व्यापारस्तदनुकूलः स देवदत्ते वर्त्तते इति फलव्यापारयोर्भिन्नाधिकरणता ।

अर्थान्तरे वर्त्तमानस्याकर्मकस्यापि सकर्मकत्वं भवति कालाध्वभावदेशापेक्षया च सर्वे एव धातवः सकर्मकाः । मासमास्ते । क्रोशो गुडधानाभिर्भूयते । गोदो–

स्वपिति । कुरून् शेते । अर्थान्तरवृत्त्यादिना च सकर्मकस्यापि अकर्मकत्वं भवति । यदाह--

धातोरर्थान्तरे वृत्ते - र्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ २ ॥

अर्थान्तरे वर्त्तमानाद्धातोः सकर्मकस्यापि अकर्मिका क्रिया भवति । यथा भारं वहति उद्यच्छतीत्यर्थः, नदी वहति स्रवतीत्यर्थः । कर्मणो धात्वर्थान्तःप्रवेशादकर्मकत्वम् । यथा ४६५ जीव ( जीव् ) प्राणधारणे जीवति । ७२८ हर्दि (हद्) पुरीषोत्सर्गे हदते । अत्र प्राणपुरीषाख्ये कर्मणी धात्वर्थेनैव क्रोडीकृते । कर्मणः प्रसिद्धत्वात् । यथा ५२७ वृषू ( वृष् ) सेचने । देवो वर्षति । न पुनरत्र रक्तं वर्षति । पार्थः शरान् वर्षति । कर्मणोऽविवक्षितत्वात् । यथा नेह पच्यते नेह भुज्यते । कर्माविवक्षा चौदासीन्यनिवृत्तिमात्रपरतया प्रयोगात् । यथा किं करोतीति प्रश्ने पचति पठतीत्यादि प्रत्यवस्थानं नतु भवति विद्यते वेत्यादि तेषामपर्यनुयोज्यत्वात् । यत्तु किं करोतीति प्रश्ने भवतीत्युत्तरं तत्क्रियाख्यकर्मनिबन्धनं नतु बाह्यकर्मापेक्षं भवनं करोतीत्यर्थावगमात् । क्रिया हि सर्वधातूनामान्तरं कर्म । अत एव क्रियाविशेषणानां कर्मत्वं स्मरन्ति । नन्वेवं क्रियाविशेषणादिति योगो व्यर्थः, कर्मणीत्येव द्वितीयासिद्धेः । नैवम् । आन्तरकर्मणा सकर्मणोऽपि अकर्मककार्यप्रतिपत्त्यर्थत्वाद्योगस्य । तेन सुखं सुप्त इत्यादौ कर्त्तरि क्तः सिद्धः । सुखं स्थातेत्यादौ कृन्निमित्ता षष्ठी न भवतीति । अत एव सकर्मकाकर्मकव्यवहारो द्रव्यकर्मनिमित्त इत्युच्यते । यदाह—

॥ सकर्मकाकर्मकत्वं द्रव्यकर्मनिबन्धनम् ॥

## ॥ अथ द्विकर्मकगणनानिरूपणम् ॥

नीहृवहिकृषो ण्यन्ता दुहिब्रूपृच्छिभिक्षिचिरुधिशास्वर्थाः ।
पचियाचि दण्डिकुग्रहमथिजिप्रमुखा द्विकर्माणः ॥ १ ॥

इमे सर्वे धातवो द्विकर्मका विज्ञेयाः । ८८४ णींग् ( नी ) प्रापणे । गा-

ममजां नयति । ८८५ हृंग् ( हृ ) हरणे । निवासं हरति घासं । ९९६ वहीं (वहू ) प्रापणे । ग्रामं भारं वहति । ५०६ कृषं (कृष् ) विलेखने । १३१९ कृषीं-त् ( कृषू ) विलेखने । ग्रामं बलिवर्दं कर्षति । ण्यन्ता इति । ३ घ्रां ( घ्रा ) गन्धोपादाने । जिनदासं पुष्पाणि घ्रापयति । दुहिब्रूपृच्छिभिक्षिचि रुचिशासुधातूनामर्था इव अर्था येषां ते तथा । दुहिप्रभृतीनां षण्णां धातूनां येऽर्थाः प्रतिपादिताः तादृशा अर्था येषां धातूनां भवन्ति तेऽपि धातवो द्विकर्मका विज्ञेयाः । ११२७ दुहींक् ( दुह् ) क्षरणे । गां दोग्धि पयः । ११२५ ब्रूंग्क् ( ब्रू ) व्यक्तायां वाचि । भव्यान् धर्मं ब्रूते । १३४७ प्रच्छंत् ( प्रच्छ् ) ज्ञीप्सायाम् । जनं मार्गं पृच्छति । ८८० भिक्षि ( भिक्षू ) याञ्चायाम् । भिक्षते गां राजानम् । १२९० चिंग्ट् ( चि ) चयने । वृक्षं पुष्पाणि अवचिनोति । १४७३ रुधृंपी ( रुधू ) आवरणे । शठं गृहमवरुणद्धि । १०९५ शासूक् ( शासू ) अनुशिष्टौ । मनुष्यं धर्मं शास्ति । ८९२ डुपचींष् ( पच् ) पाके तण्डुलानोदनं पचति । याचिरत्रानुनयार्थस्तेन भिक्ष्यर्थाद्भिदः । ८९१ डुयाचृग् ( याच् ) याञ्चायाम् । शठं धर्मं याचतेऽनुनयतीत्यर्थः । १८६९ दण्डण् ( दण्ड् ) दण्डनिपाते । देवदत्तं शतं दण्डयति । ८८८ डुकृंग् ( कृ ) करणे । मृदं घटं करोति । १५१७ ग्रहीश् [ग्रह्] उपादाने । द्रव्यं धान्यं प्रतिगृण्हाति । १५४७ मन्थश् ( मन्थ् ) विलोडने । समुद्रममृतमम्नात् । ८ जिं ( जि ) अभिभवे । देवदत्तं शतं जयति । प्रमुखग्रहणात् १५६३ मुषश् (मुष्) स्तेये । गोविन्दं शतं मुष्णाति । एतद्व्याख्या तु मतान्तरीयोक्तकारिकानुसारेण कृता । हेमचन्द्रसूरीशानैस्तु । तच्च [ द्विविधं कर्म तु ) द्विकर्मकेषु दुहिभिक्षिरुधिप्रच्छिचिग्रगृशास्वब्रूर्थेषु याचि जयतिप्रभृतिषु नीहृकृषवहेषु च भवति । अत्रोदाहरणानि तु निरुक्तान्येव । अत्रोक्तातिरिक्तधातूणामुपरि गणना कृता । सा अत्रैव समवसरति । इदं तस्या उपलक्षणं मतभेदो वेति स्वयमूह्यम् ।

॥ इति द्विकर्मकगणनानिरूपणम् ॥

---

## ॥ अथ गौणमुख्यकर्मनिरूपणम् ॥

न्यादीनां कर्मणो मुख्यं प्रत्ययो वक्ति कर्मजः ।
नीयते गौर्द्विजैर्ग्रामं भारो ग्राममथोह्यते ॥ १ ॥
गौणं कर्म दुहादीनां प्रत्ययो बक्ति कर्मजः ।
गौः पयो दुह्यतेऽनेन शिष्योऽर्थं गुरुणोच्यते ॥ २ ॥

कर्म द्विविधं मुख्यं गौणञ्च । तत्र यदर्थं क्रिया आरभ्यते तत्प्रधानम् । तत्सिद्ध्यै यत्क्रियया व्याप्यते गवादि तदप्रधानम् ।अन्यत्सर्वं स्फुटम् । किञ्च गत्यर्था-नामकर्मकाणां तु णिगन्तानां प्रधाने एव कर्मणि गम्यते मैत्रो ग्रामम् । आस्यते मासं मैत्रः । बोधाहारार्थशब्दकर्मकाणां तु णिगन्तानामुभयत्र बोध्यते शिष्यो धर्मम् । बोध्यते शिष्यं धर्मो वा । भोज्यतेऽतिथिमोदनः । भोज्यतेऽतिथिरोदनम् । पाठ्यते शिष्यो ग्रन्थम् । पाठ्यते शिष्यं ग्रन्थो वा ।

॥ इति गौणमुख्यकर्मनिरूपणम् ॥

---

## ॥ अथ धातूपसर्गजन्यभेदप्रकाशनिरूपणम् ॥

बीजकालेषु सम्बद्धा यथा लाक्षारसादयः ।
वर्णादिपरिणामेन फलानामुपकुर्वते ॥ १ ॥
बुद्धिस्थादभिसम्बन्धा- त्तथा धातूपसर्गयोः ।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाश्यते ॥ २ ॥

व्याख्या—अथ किं धातुः पूर्वमुपसर्गेण युज्यते उत साधनेनेति ! साधनं हि क्रियां निवर्त्तयति [ साध्यत्ववैशिष्ट्येन बोधयतीति तामुपसर्गो विशिनष्टि ( स्वद्योत्यविशेषणवैशिष्ट्येन बोधयतीत्यर्थः ) अतः पूर्वं साधनेन साधनं कारकम् तदभिधायि कार्येण, युज्यत इति तदयुक्तम् पूर्वं हि धातोः साधनेन सम्बन्धे आस्यते गुरुणा इत्यकर्मकः उपास्यते गुरुरिति सकर्मकः केन स्यात्.

यस्माद्विशिष्टैव क्रिया साधनेन साध्यते नतु साधनाल्लब्धस्वरूपान्यतो विशेषं लभते तस्मात् पूर्वमुपसर्गेण युज्यते–इति युक्तम् । न च प्रत्ययसम्बन्धमन्तरेण क्रियाविशेषस्यानभिव्यक्तेर्न धातोः पूर्वमुपसर्गेण सम्बन्धो युज्यते इति

वाच्यम् ? यतः—

बीजकालेषु सम्बद्धा यथा लाक्षारसादयः ।
वर्णादिपरिणामेन फलानामुपकुर्वते ॥ १ ॥

बीजकालेषु–बीजोत्पत्तिसमयेषु सम्बद्धाः सम्पृक्ताः, [ बीजैरिति शेषः ] लाक्षारसादयः—जतुरसप्रभृतयः फलानां वर्णादिपरिणामेन रूपरसादिपरिणमनद्वारा, यथा उपकुर्वते ।

( बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ॥
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ १ ॥ )

तथा धातूपसर्गयोः बुद्धिस्थाद् ( बुद्धिविषयीकृतात्, ) अभिसम्बन्धात् भेदः ( उपसर्गार्थकृतो विशेषः ) अभ्यन्तरीकृतः ( बुद्धिस्थीकृतः, धातुनेति शेषः, पदकाले उपसर्गसंज्ञकशब्दप्रयोगकाले प्रकाशते. श्रोतुरिति शेषः ॥ इति अङ्कुरोत्पत्तिसमये लाक्षारसादिसेकेन फलानां रूपरसादिवैलक्षण्यं भवति इति लोकप्रसिद्धिः, तत्र यथा लाक्षारसादीनां पूर्वकालिकसम्बन्धेन जायमाना विलक्षणता फलकाले प्रकाशते तथा पूर्वकालिकोपसर्गसम्बन्धेन जायमानः उपसर्गार्थकृतो विशेषः उपसर्गप्रयोगकाले प्रकाशते–एवं च पूर्वमुपसर्गयोगो नाम तदर्थसम्बन्धः तत. उपसर्गशब्दात् पूर्वं साधनकार्ययोगः तत उपसर्गसंज्ञकशब्दप्रयोग इति तात्पर्यम्, इत्यलम् ।

---

## ॥ अथ षोपदेशनिरूपणम् ॥

स्वरदन्त्यपरसकारादयः स्मिस्विदिस्वदिस्वञ्जिस्वपयश्च ।
षोपदेशाः सृपि, सृजि, स्त्या, स्तॄ, स्तृ, सृ, सेकृवर्जम् ॥१॥

स्वरा अवर्णादयो दन्त्या लृवर्णतवर्गलसास्ते परा यस्मात्तादृशो यः सकारः स आदौ येषां ते स्वरदन्त्यपरसकारादयः स्वरपरसादयः दन्त्यपरसादयश्च धातवः षोपदेशा ज्ञेयाः उत्तरदलदर्शितान् विहाय । यथा ९९० षहि ( सहू ) मर्षणे । ९ ष्ठां ( स्था ) गतिनिवृत्तौ । उक्तलक्षणेनाग्रहादाह–स्मीत्यादि–स्मिप्रभृतयश्च षो-

पदेशा विज्ञेयाः । ५८७ ष्मिङ् ( स्मि ) ईषद्धसने । ९४६ ञिष्विदाङ् ( स्विद् ) मोचने च । ११७८ ष्विदांच् ( स्विद् ) गात्रप्रक्षरणे । ७२९ ष्वदि ( स्वद् ) आस्वादने । १७४२ ष्वदण् ( स्वद् ) आस्वादने । ष्वञ्जित् ( स्वञ्ज् ) सङ्गे । १०८८ ञिष्वपंक् ( स्वप् ) शये । सृपिप्रभृतीन् विहाय । ते चेमे । ३४१ सृप्लं ( सृप् ) गतौ । १२५५ सृजिंच् ( सृज् ) विसर्गे । १३४९ सृजंत् ( सृज् ) विसर्गे ४० । स्त्यैं (स्त्यै) संघाते । १५२१ स्तृगृश् ( स्तृ ) आच्छादने । १२९२ स्तृंगृट् ( स्तृ ) आच्छादने । २५ सृं ( सृ ) गतौ । ६३५ सेकृङ् [ सेकृ ] गतौ । षोपदेशफलं तु असीषहत् इत्यादौ षत्वकरणम् । स्मिप्रभृतिभिः साहचर्यादेक-स्वराणामेव षोपदेशस्मृतिः । अत एव सूत्रसत्रसंग्रामसामसमाजस्थूलस्तनस्तेन स्तोमसुखानामषोपदेशत्वात् सोसूत्र्यते सिसत्रयिषते इत्यादौ षत्वं न भवति ।

॥ इति षोपदेशप्रकरणम् ॥

## ॥ अथ णोपदेशनिरूपणम् ॥

सर्वे च नादयो णोपदेशा नृति नन्दि नर्दि नशि नाटि नक्कि नाधृ नाथृ नॄवर्जम् । येषां धातूनामादौ नकारो भवेत्ते णोपदेशा विज्ञेयाः । नृतिप्रभृतीन् वि-हाय ते चेमे ॥ ५२ नृतैच् (नृत्) नर्तने । ३१२ टुनदु [नन्द्] समृद्धौ ३०२ नर्द ( नर्द् ] शब्दे । १२०२ नशौच ( नश् ] अदर्शने । नाटीति १५९३ नटण् [नट्] अवस्यन्दने इत्यस्यैवात्र वर्जनं नतु १८७ णट्ट लट्ट नृत्तौ ॥ १०३३ णट [ नट् ] नतौ एतयोः । १५७३ नक्कण् ( नक्क् ) नाशने । ४४७ नाधृङ् [ नाधृ ) नाथृङ्वत् । ७१६ नाथृङ् [ नाथ् ] उपतापैश्वर्याशीःषु च । १०१६ नॄ नये । १५६७ नॄश् [ नॄ ] नये । एतद्व्यतिरिक्ता नकारादयः सर्वे णोप-देशाः यथा ६५ णख [ नख् ] गतौ । णोपदेशफलन्तु प्रणखतीत्यादौ णत्वम् । ननु ६४ नख ( नख् ) गतौ । इत्यस्य अणोपदेशत्वात् कथमत्र न वर्जनमिति चेदु-च्यते नख णख इति पाठसामर्थ्यादेव अणोपदेशत्वमेवान्यत्रापि ।

॥ इति णोपदेशप्रकरणम् ॥

## ॥ अथ धात्वर्थविशेषनिरूपणम् ॥

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
विहाराहारसंहार प्रहारप्रतिहारवत् ॥ १ ॥
धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते ।
तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ॥ २ ॥

उपसर्गेण ॥

प्रपरापसमन्ववनिर्दुरभि–व्यधिसूदतिनिप्रतिपर्यपयः ।
उप आङिति विंशतिरेष सखे ! उपसर्गगणः कथितः कविभिः ॥१॥

इत्याद्यन्यतमेन धात्वर्थो धातुपाठे य उक्तोऽर्थः स बलात्प्रतीतिसामर्थ्यादन्यत्रान्यस्मिन्नर्थे नीयते स्थाप्यते पर्यवसितो भवतीत्यर्थः । अत्र ये उपसर्गस्य द्योतकत्वमामनन्ति तन्मते तु अन्योऽप्यर्थस्तस्य धातोरेव ये तु वाचकत्वमाश्रयन्ति तन्मते धातुसम्बन्धात्तमन्यमर्थमुपसर्ग एवाभिधत्ते तदेवाह–८८५ हृंग् ( हृ) हरणे । अस्य हरणार्थत्वेऽपि विहारः क्रीडासमीचीनगमनं वा ॥ आहारो भोजनम् । संहारो विनाशः । प्रहारस्ताडनम् । प्रतिहारः द्वाःस्थकर्म । इत्यादौ उक्तादिक्तविविधार्थावगतेः । कश्चिदुपसर्गो धात्वर्थं बाधते । यथा–३२० षिधू ( सिध् ) गत्याम् । प्रतिषेधति । अत्र गत्यर्थं बाधित्वा निषेधार्थमभिदधति । कश्चित्तं मौलधात्वर्थमनुवर्त्तते यथा अधीयते । अत्र ११०४ इङ्क् ( इ ) अध्ययने । अयमधिनाऽवश्यंभावी योगो न चार्थविशेषः । अन्य उपसर्गस्तमेव मूलधात्वर्थं विशिनष्टि विशिष्टतामापादयति । यथा ९९२ डुपचींष् ( पच् ) पाके प्रपचति प्रकृष्टं प्रकर्षे वा पचतीत्यर्थः । अन्य उपसर्गोऽनर्थक एव प्रयुज्यते । ३९६ गम्लृं ( गम् ) गतौ । अधिगच्छति । अत्र न धात्वर्थबाधो न वा धात्वर्थविशेषता न वा गम्-धातुनाऽवश्यंभावी योग इति ।

## ॥ इति धात्वर्थविशेषनिरूपणम् ॥

## ॥ अथ अनुस्वारनिरूपणम् ॥

नकारजावनुस्वार-पञ्चमौ धुटि धातुषु ।
सकारजः शकारश्चे-र्षाट्टवर्गस्तवर्गजः ॥ १ ॥

धातुषु धुटि धुडादौ वर्णे परे सति योऽनुस्वारो वर्गपञ्चमाक्षरो वा दृश्यते स नकारस्थाने जात इति वेदितव्यम् । ४९६ दंशं ( दन्शू-दंशू ) दशने दशति । अत्र यदि नकारजोऽनुस्वारो न भवेत्तर्हि दंशसञ इति लुग्न स्यात् १३७८ तुम्फत [ तुन्फ-तुम्फ ) तृप्तौ । तृफति । अत्रापि नकारजो मकाररूपपञ्चमो वर्णो न स्यात्तर्हि नो व्यञ्जनस्येति लुग्न स्यात् । एवं चे चकारे परे यः शकारः स सकारजः सकारस्थाने जातः । यथा ॥ ६ षस्च ( सस्च्-सश्च ) गतौ । सश्चति । अत्र शकारः सकारस्थाने जातः । र्षात् रकारात् षकाराच्च परो यः टवर्गः स तवर्गौ जातः । यथा ११२३ ऊर्णुगृक् ( ऊर्नु-ऊर्णु ) आच्छादने । ऊर्णुनाव । अत्र रकारात्परो यो णकारः स नकारस्थाने जातः । अन्यथा ऊर्णुणाव इत्येव स्यात् । ५ ष्ठां ( स्था ) गतिनिवृत्तौ । अत्र षकारस्तु षोपदेशार्थस्तदन्तरं ठकाररूपटवर्णस्थकाररूपतवर्गजातः । एवं र्षाट् इत्यत्र पूर्वार्थे पञ्चमीविवक्षायां २५७ अट्ड ( अट्ड्-अड्ड् ) अभियोगे अड्डति इत्यादिकमपि भावनीयम् ।

## ॥ इत्यनुस्वारादिनिरूपणम् ॥

---

## ॥ अथ धातुत्वनिरूपणम् ॥

क्रियार्थो धातुः । क्रिया कृतिः प्रवृत्तिर्व्यापार इति यावत् । पूर्वापरीभूता साध्यमाना रूपा सार्थोऽभिधेयं यस्य स शब्दो धातुसंज्ञो भवति। पूर्वावयवयोगात्पूर्वाऽपरावयवयोगादपरा पूर्वा चासावपरा च पूर्वापरा अपूर्वापरा पूर्वापराभूता पूर्वापरीभूता, तत्र पूर्वोऽवयवोऽधिश्रयणादिरपर उदकसेकादिस्तौ तौ द्वावपि भागौ पाकक्रियायां स्तः । सा ह्यधिश्रयणोदकसेचनादिरूपा साध्यमाना साधनायत्तस्वरूपा क्रियास्ति । यथा पचति कश्चैत्रः कमोदनं कैः काष्ठैः क्व स्थाल्यां कुतः कुशूलात् कस्मै

मैत्रायेति भावना। ननु पचतीत्यादिष्वस्तु क्रियात्वं भवत्यादिषु तु सत्ताया नित्यत्वेन साध्यमानत्वाभावात् तदभावे च पूर्वापरविभागाभावाद तदभावे च क्रियार्थत्वाभावे न प्राप्नोति धातुसंज्ञा। सत्यम्। आधेयभेदेन सत्तापि पूर्वापरीभूता साध्यमाना। यथा देवदत्तसत्ता क्वचिद्गमनयुक्ता क्वचिद्भोजनयुक्ता क्वचित्पठनयुक्ता। एवमनेकधा योजना कार्या। एधते। अस्ति। दीव्यति। सुनोति। तुदति। रुणद्धि। तनोति। क्रीणाति। सहति। आयादिप्रत्ययान्तानामपि क्रियार्थत्वात् धातुत्वम्। गोपायति। कामयते। ऋतीयते। जुगुप्सते। कण्डूयति। पापच्यते। चोरयति। कारयति। चिकीर्षति। पुत्रकाम्यति। पुत्रीयति। अश्वति। श्येनायते। हस्तयते। मुण्डयति। एवं जुस्तम्भूचुलुम्पादीनामपि। जवनः। स्तभ्नाति। चुलुम्पाञ्चकार। प्रेङ्खोलयति। ननु क्रियार्थे धातौ शिश्ये इत्यादिषु भावे तदर्थप्रत्ययस्यापि धातुत्वप्रसङ्गः। भावप्रत्ययो हि क्रियार्थे एवोत्पद्यते। ततश्चात्सन्ध्यक्षरस्येत्यात्वप्रसङ्गः। आत्वं हि धातोर्विहितमनैमित्तिकञ्चेति। अतः प्रत्ययनिषेधार्थं क्रियाविशेषकं प्रथमग्रहणं कर्तव्यं व्याख्येयश्च प्रथमं यः क्रियामाहेति। प्राथम्यश्चात्राभिधानापेक्षं ग्राह्यं तेन किं सिद्धमन्येनानभिहितां क्रियां य आह स धातुः। अयमर्थः—अन्येभ्यः क्रियाभिधायिभ्यो यः प्रथममाहेति। शिश्ये इत्यत्र तु शीत्यनेनाभिहितां क्रियां प्रत्यय आहेति न तस्य धातुसंज्ञा प्रवृत्तिः। शब्दार्थापेक्षया प्राथम्यं घटते तत्र शब्दतश्चेत्पुत्रीयतीत्यादावपि न प्राप्नोति। नात्र प्रथममुच्चार्यमाणः पुत्रशब्दः क्रियामाह। अर्थतश्चेत्पुत्रीयतीत्यादौ प्रथमा आद्या क्रिया अप्रथमेनापि क्येनाभिधीयते न तु द्वितीयेति सिद्ध्यति धातुसंज्ञा।

ननु प्रथमग्रहणे सति चिकीर्षतीत्यत्रापि न प्राप्नोति धातुसंज्ञा। यतोऽत्रापि सन् प्रत्ययो न प्रथमं क्रियामाह, अपि तु कृ इत्यनेनाभिहिताम्। नैवम्। करोत्यर्थोपसर्जनामिच्छामन्येनानभिहितां सन् प्रत्यय आहेति स्यादेव धातुसंज्ञेति। अत्रोच्यते। यथाऽत्र प्रथमग्रहणे कृते शिश्ये इत्यत्र धातुसंज्ञा न भवति तथा स्वार्थिकायादिप्रत्ययान्तानां न प्राप्नोति गोपायति कामयते इत्यादिषु अत्रा। अभिहिताया एव क्रियाया आयादिभिरभिहितत्वात्। तस्मादेव व्याख्येयं

क्रियामेव प्राधान्येन योऽभिधत्ते स क्रियार्थाभिधायी साधुसंज्ञा । गोपायतीत्यादावपि तदस्तीति सिद्धा धातुसंज्ञा । शिश्य इत्यादौ तु भूतानद्यतनपरोक्षत्वादेरभिधानान्न धातुसंज्ञा । एतेन क्रियैवाभिधेया यस्य स धातुः । एवं च कृत्वा कर्तुमित्यादिषु साध्ये भावे कृत्प्रत्ययान्तस्यापि न धातुसंज्ञा । किञ्चान्यदपि उत्तरमस्ति । अव्ययसंज्ञया धातुसंज्ञाया बाधितत्वात् । इकिश्तिव् स्वरूपार्थे इति प्रत्ययान्तस्य सिद्धसाध्ययोरभेदोपचारेण सिद्धरूपत्वात् । कर्तव्यं भूयते इत्यादौ तु भावे त्याद्यन्तस्य क्रियार्थत्वेऽपि न धातुत्वं साहचर्यात् । यतोऽन्येषामलिङ्गसङ्ख्यानामपदसंज्ञकानां धातुसंज्ञा प्रत्ययादि । अत्र लिङ्गसङ्ख्यानां विद्यमानत्वात् । क्रियामेव प्राधान्येन योऽभिधत्ते स धातुरिति यल्लक्षणं कृतं तस्य शिष्टधातुपाठानुसारित्वाद् आणपयतीत्यानिवृत्तिः । ननु यद्येवं शिष्टधातुपाठ एवास्तु किमनेन लक्षणेनेति चेन्मैवं पाठपठितानामपि क्रियार्थानामेव धातुत्वज्ञापनार्थत्वात् । अयं भावः—लक्षणात्पृथक् पठिता अपि त एव शिष्टा धातवो ये क्रियार्थाः । तेन यावाप्रभृतीनां सर्वनामविकल्पाद्यर्थानां पाठाविसंवादित्वेऽपि लक्षणविसंवादित्वाद् आणपयतीत्यादीनां तु क्रियार्थत्वेऽपि पाठविसंवादित्वाद्धातुत्वाभावः । अन्वयव्यतिरेकाभ्याञ्च धातोः क्रियार्थत्वापगमः । तथाहि—पचतीत्यादौ धातुप्रत्ययसमुदाये संसृष्टक्रियाकालकारकाद्यनेकार्थाभिधायिनि प्रयुज्यमाने धातोरेवं क्रियार्थत्वमेवगम्यतेऽन्वयव्यतिरेकाभ्यां नेतरेषाम् । पचतीति प्रयोगे द्वयं श्रूयते पच् इति प्रकृतिः अति-इति प्रत्ययश्च । अर्थोऽपि कश्चिद्गम्यते । विक्लित्तिः कर्तृत्वमेकत्वम् । पठतीत्युक्ते कश्चित् शब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी । पच् शब्दो हीयते पठ् शब्द उपजायते अतिशब्दोऽन्वयी । अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी । विक्लित्तिर्हीयते पठिरुपजायते एकत्वश्चान्वयी । तेन मन्यामहे यः शब्दो हीयते तस्यासावर्थो यो हीयते यश्च शब्द उपजायते तस्यासावर्थो य उपजायते यश्च शब्दोऽन्वयी तस्यासावर्थो योऽन्वयीति । ननु कृविः करोत्यर्थः क्रिया तत्र युक्तं पचादीनां किं करोति पचति किं करोति पठतीति करोतीत्यर्थगर्भितत्वात् क्रियात्वम् अस्ति विद्यते भवतीनां तु न युक्तम्,

नहि भवति किं करोति अस्ति भवति विद्यते वेति । तदयुक्तम् । न करोत्यर्थः क्रियाशब्दस्य प्रवृत्तिनिमित्तमपि तर्हि कारकव्यापार विशेषः । व्यापारश्च व्यापारान्तराद्क्रियते इत्यस्त्याद्यर्थोऽपि क्रियैव । करोत्यर्थस्तु क्रियाशब्दस्य व्युत्पत्तिनिमित्तमेव । ननु पचतीत्यादिषु हि तदस्ति इति धातुत्वं यतः पचती युक्ते न पठति न गच्छति न किञ्चिदन्यद्व्यापारान्तरं विधत्ते किन्तु पाकरूपविशेष एव गम्यते । अपि तु अस्त्यादीनां न प्राप्नोति क्रियात्वं सत्ताया व्यापारविशेषाभावात् यतः सर्वोऽपि धात्वर्थोऽस्त्यादिभिर्व्याप्त इति चेत्सत्यम् अस्त्यैवैतत्तथापि पाकादेर्विशेषात्सत्ताया अपि विशेषो ज्ञायते स्वरूपेण । नहि स एव पाकः सैव सत्ता । यथानेकघटाच्छादक एकः पटस्तेष्वनुस्यूतोऽपि तेभ्यो भिद्यते । नहि स एव पटः स एव घटः । एवं प्रस्तुतेऽपि । एवं सति क्रियासामान्यवचनाः कृभ्वस्तयः क्रियाविशेषवचनास्तु पचादय इतिसिद्धम् । यथा क्रियाशब्दस्य न करोत्यर्थः प्रवृत्तिनिमित्तं किन्तु कारकव्यापारविशेषस्तथा भावशब्दे न भवत्यर्थः प्रवृत्तिनिमित्तमपि तु कारकव्यापारविशेष एवेत्यर्थः । यदाह हरिः—आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता । प्रकल्पिता यथा शास्त्रे सद्यादिष्वपि क्रमः ॥१॥ साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना । सत्त्वभागस्तु यस्तस्याः स घञादिनिबन्धनः ॥२॥ तथा च भावे घञ् इत्युक्त्वा पाकः कार इत्यादयोऽप्युदाह्रियन्ते । क्रियोपपदाद्धातोस्तुमित्युक्त्वा योद्धुं धनुर्भवति द्रष्टुं चक्षुर्जातमित्याद्यपि उदाहरणं युक्तम् । यदाहुः—यत्रान्यक्रियात्पदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यते । क्रिया च द्वेधा सिद्धसाध्यत्वभेदात् । तत्र सिद्धस्वभावोपसंहृतक्रमा परितः परिच्छिन्ना सत्त्वभावमापन्ना घञादिभिरभिधीयते । यदाह–कृदभिहितो भावो द्रव्यवत्प्रकाशते इति । तुमादिभिस्तु सत्त्वभावमनापन्नेति विशेषः । साध्यमानावस्था पूर्वापरीभूतावयवा भूतभविष्यद्वर्तमानसदसदाद्यनेकावयवरूपाख्यातपदैरुच्यते । यदाह–पूर्वापरीभूतं भावमाख्यातेनाचष्टे । यथा च पचतीत्यत्र पूर्वापरीभूतभावस्तद्वदेव जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति भवति श्वतते संयुज्यते समवैतीत्यादावपि । साध्यत्वाभिधानेन क्रमरूपाश्रयणात्

क्रियाव्यपदेशः सिद्धः । तदुक्तम्-यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात् तत् क्रियेत्यभिधीयते ॥ १ ॥ सिद्धं सत्तादि असिद्धं तु कटादि । ननु एवं तर्हि सत्तायाः साध्यमानता कया रीत्या । उच्यते यथा एकस्मिन् स्थाने पाषाणखण्डं कस्तूरिका चास्ति ततः कस्तूरिकामाहात्म्यात्पाषाणखण्डमपि सुगन्धि भवत्येवमत्रापि कस्मिंश्चिदेकस्मिन् पिण्डे पाकक्रिया सत्ता च विद्यते पाकक्रिया च पूर्वापरीभूता ततस्तस्या माहात्म्यात्सत्तापि पूर्वापरीभूता भवतीति साध्यमानत्वम् । किं बहुनाख्यातपदेन उच्यमानः सिद्धभावोऽपि साध्यरूपतां भजति तन्माहात्म्यादित्यलं बहुना !

॥ इति धात्वर्थनिरूपणम् ॥

श्रीमत्तपोगणगगनाङ्गणगगनमणि–सार्वसार्वज्ञशासनसार्वभौम–तीर्थरक्षण-विद्यापीठादि प्रस्थानपञ्चकसमाराधक–संविग्नशाखीय–आचार्यचूडामणि–अखण्डविजयश्रीमद्गुरुराज विजयनेमिसूरीश्वर चरणेन्दिरामन्दिरेन्दिन्दिरायमाणान्तिषन्मुनिलावण्यविरचिते धातुरत्नाकरे अनिट्कारिकानुबन्धकारिकावृत्तगणफलसकर्मकत्वाकर्मकत्वद्विकर्मकगणनागौमुक्कर्मधातूपसर्गजन्यभेदप्रकाशनषोपदेशधात्वर्थविशेषानुस्वारधातुत्वनिरूपणरूपप्रकीर्णकप्रकरणं सम्पूर्णम् ।

॥ समर्थितश्च धातुरत्नाकरस्य प्रथमो विभागः ॥

श्रीरस्तु ।

## श्रीधातुरत्नाकरस्थस्वपराभिमतधातूनामकाराद्यक्षरानुपूर्व्या किञ्चित्संस्कृता निरनुबन्धा सूची ॥

यद्यपि वैयाकरणप्रकाण्डैर्गणो नवधा विभक्तस्तथापि लौकिकप्रथा तु गणा दशेति । लौकिका हि द्वितीयगणे ये धातवो न द्विर्भावं भजन्ति ते द्वितीयगणीयाः, ये भजन्ति ते तृतीयगणीया इत्यामनन्ति । अत्र च लौकिकप्रथानुसारेणेयं सूची ॥

| ग० | धा० ना० | धा-र-पृ० | ग० | धा० ना० | धा-र-पृ० | ग० | धा० ना० | धा-र-पृ० |
|---|---|---|---|---|---|---|---|---|
| १० | अंश् | १०६७ | १ | अट्ट् | ३४६ | १ | अम्भ् | ४०० |
| १ | अंह् | ४४२ | १० | अट्ट् | ९०३ | १ | अय् | ४०८ |
| १० | अंह् | १००७ | १ | अठ् | ११९ | | अरर | ११२५ |
| १ | अक् | ५५६ | १ | अड् | १३[illegible] | १० | अर्क् | ८९० |
| १ | अक्ष् | २९२ | १ | अड्ड् | १३५ | १ | अर्च् | ५८ |
| १ | अग् | ५५७ | १ | अण् | १३६ | १० | अर्च् | १०९३ |
| | अगद् | ११४९ | १ | अण्ठ् | ३५० | १ | अर्ज् | ७७ |
| १० | अघ् | १०३४ | १ | अत् | १४६ | १० | अर्ज् | ०७ |
| १ | अङ्क् | ३१४ | २ | अद् | ५७० | १० | अर्थ् | १०७४ |
| १० | अङ्क् | १०३२ | २ | अन् | ५८५ | १ | अर्द् | १५८ |
| १ | अङ्ग् | ४७ | ४ | अन् | ६९७ | १० | अर्द् | ११०१ |
| १० | अङ्ग् | १०३४ | १ | अन्त् | १४९ | १ | अर्ब् | १८६ |
| १ | अङ्घ् | ३२८ | १ | अन्द् | १६१ | १ | अर्व् | २४५ |
| १ | अज् | ७१ | १ | अन्दोल् | ११५७ | १ | अर्ह् | २८९ |
| १ | अञ्च् | ५८ | ७ | अन्ध् | १०५० | १० | अर्ह् | ९८९ |
| १ | अञ्च् | ४६३ | १ | अभ्र् | २१२ | १ | अल् | ४९२ |
| १० | अञ्च् | ९६९ | १ | अम् | २०४ | १ | अव् | २५१ |
| ७ | अञ्ज् | ८२९ | १ | अम् | २०५ | ५ | अश् | ७३० |
| १० | अञ्ज् | ९९३ | १० | अम् | ९८० | ९ | अश् | ८७९ |
| १ | अट्ट् | १०३ | १ | अम्ब् | ३९४ | | | |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| १ | अषू | ५०४ |
| १ | असू | ५०५ |
| २ | असू | ५९२ |
| ४ | असू | ६७० |
|  | असू | ११३९ |
|  | असु | ११३३ |
|  | **आ** |  |
| १ | आङ्छू | ६७ |
| ५ | आपू | ७२७ |
| १० | आपू | ११[illegible]२ |
| २ | आसू | ६०१ |
|  | **इ** |  |
| १ | इ | ११ |
| २ | इ | ५७७ |
| २ | इ | ५७८ |
| २ | इ | ५९३ |
| १ | इखू | ४३ |
| १ | इङ्खू | ४३ |
| १ | इङ्गू | ४९ |
| १ | इञ्जू | ३४० |
| १ | इटू | १०४ |
| १ | इन्दु | १६१ |
| ७ | इन्धू | ८३४ |
| १ | इन्वू | २५१ |
|  | इमसू | ११३८ |
|  | इयसू | ११३८ |
|  | इरधू | ११४६ |
|  | इरम्रू | ११३७ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| ६ | इलू | ७८० |
| १० | इलू | ९५३ |
| ४ | इषू | ६४१ |
| ६ | इषू | ७८९ |
| ९ | इषू | ८७९ |
|  | इषुध | ११४६ |
|  | **ई** |  |
| २ | ई | ५७९ |
| ४ | ई | ६९० |
| १ | ईक्षू | ४५५ |
| १ | ईङ्खू | ४४ |
| १ | ईजू | ३४० |
| २ | ईडू | ५९८ |
| १० | ईडू | ९१९ |
| २ | ईरू | ५९९ |
| १० | ईरू | १११४ |
| १ | ईर्क्ष्यू | २०९ |
| १ | ईर्ष्यू | २०१ |
| २ | ईशू | ५९९ |
| १ | ईषू | २५९ |
| १ | ईषू | ४२९ |
| १ | ईहू | ४४२ |
|  | **उ** |  |
| १ | उ | १०३ |
| १ | उक्षू | २९० |
| १ | उखू | ३७ |
| १ | उङ्गू | ५० |
| ४ | उचू | ५४५ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| ६ | उच्छू | ७५१ |
| ६ | उच्छू | ७५२ |
| ६ | उज्झू | ७५७ |
| १ | उठू | ११५ |
| ७ | उन्दू | ८३१ |
| ६ | उब्जू | ७५३ |
| ६ | उभू | ७७२ |
| ६ | उम्भू | ७७३ |
|  | उरसू | ११३६ |
|  | उरण | ११[illegible]१ |
| १ | उषू | २७२ |
|  | उषस्रू | ११३६ |
| १ | उहू | २८८ |
|  | **ऊ** |  |
| १० | ऊनू | १०५२ |
| १ | ऊयू | ४१२ |
| १० | ऊर्जू | ८९२ |
| २ | ऊर्णु | ६०५ |
| १ | ऊर्दू | ३७७ |
| १ | ऊर्वू | २४[illegible] |
| १ | ऊषू | २५९ |
| १ | ऊहू | ४४८ |
|  | **ऋ** |  |
| १ | ऋ | १८ |
| ३ | ऋ | ६१५ |
| ६ | ऋचू | ७४९ |
| ६ | ऋच्छू | ७५० |
| १ | ऋजू | ३४१ |

| ग० | धा- ना० | धा-र-प० | ग० | धा- ना० | धा-र-प० | ग० | धा- ना० | धा-र-प० |
|---|---|---|---|---|---|---|---|---|
| १ | ऋञ्ज् | ३४१ | १ | कख् | ५५६ | १ | कम् | ४०७ |
| ८ | ऋण् | ८३९ | | कगू | ११२८ | १ | कम्प् | ३९० |
| १ | ऋत् | १५० | १ | कङ्क् | ३२० | १ | कर्ज् | ७८ |
| १ | ऋतीय् | १५० | १ | कच् | ३३३ | १० | कर्ण् | १०४४ |
| ४ | ऋध् | ६५० | १ | कञ्च् | ३३४ | १ | कर्द् | १६० |
| ५ | ऋध् | ७२६ | १ | कट् | ९३ | १ | कर्ब् | १८६ |
| ६ | ऋफ् | ७६८ | १ | कट् | १०५ | १ | कर्ब् | २३७ |
| ६ | ऋफ् | ७६९ | १ | कट्ट् | १०६ | १ | कल् | ४१९ |
| ६ | ऋम्फ् | ७७० | १ | कठ् | ११४ | १० | कल् | ९५१ |
| ६ | ऋष् | ७८९ | ६ | कड् | ७५८ | १ | कल् | १०६४ |
| | ॠ | | १ | कड्ड् | १३४ | १ | कल्ल् | ४२० |
| ९ | ॠ | ८६९ | १ | कण् | १४१ | १ | कश् | २५२ |
| | ए | | १ | कण् | ५६३ | २ | कश् | ६०२ |
| १ | एज | ८० | १० | कण् | ९७५ | १ | कष् | २६० |
| १ | एज् | ३३८ | १ | कण्ट् | १०६ | १ | कस् | ५३७ |
| १ | एठ् | ३४७ | १ | कण्ठ् | ३४८ | २ | कस् | ६०२ |
| १ | एध् | ३८१ | १० | कण्ठ् | १०९७ | १ | काङ्क्ष् | २९८ |
| | एला | ११४३ | १ | कण्ड् | १३४ | १ | कामय् | ४०७ |
| १ | एष् | ४३१ | १ | कण्ड् | ३५३ | १० | काल् | १०६६ |
| | ओ | | १० | कण्ड् | ९१६ | १ | काश् | ४२७ |
| १ | ओखृ | ३३ | | कण्डु | ११२९ | ४ | काश् | ७०४ |
| १ | ओण् | २४३ | १ | कत्थ् | ३७० | १ | कास् | ४३५ |
| १० | ओलण्ड् | ९१३ | १० | कत्र् | १०६० | ३ | कि | ६२४ |
| | क | | १० | कथ् | १०४८ | १ | किट् | ९५ |
| २ | कंस् | ६०१ | १ | कन् | १७२ | १ | किट् | १०५ |
| १० | कंस् | १००५ | १ | कन्द् | १६४ | १ | कित् | १४९ |
| १ | कक् | ३१८ | १ | कन्द् | ५५१ | ३ | कित् | ६२५ |
| १ | कक्ख् | ३७ | १ | कब् | ३९५ | ६ | किल् | ७८० |

| ग० | धा- ना० | धा-र-पृ० | ग० | धा· ना० | धा-र-पृ० | ग० | धा- ना० | धा-र-पृ० |
|---|---|---|---|---|---|---|---|---|
| १० | किलृ | ९५२ | ९ | कुन्थ् | ८७४ | १ | कृप् | ५०३ |
| १० | किष्क् | १०१६ | १० | कुन्द्र् | ९४५ | १० | कृप् | ९७९ |
| १० | कीट् | ९०८ | ४ | कुप् | ६५४ | १० | कृप् | १०५३ |
| १ | कील् | २१९ | १० | कुप् | १००२ | ४ | कृश् | ६६२ |
| १ | कु | ३०४ | १० | कुमार् | १०६४ | १ | कृष् | २५० |
| २ | कु | ५८४ | १ | कुम्ब् | १९२ | ६ | कृष् | ७३५ |
| ६ | कु | ८११ | १० | कुम्ब् | ९४२ | ६ | कॄ | ७४६ |
| १० | कुंश् | १००३ | ६ | कुर् | ७७५ | ९ | कॄ | ८५९ |
| १० | कुंस् | १००५ | १ | कुर्द् | ५३५ | ९ | कॄ | ८६४ |
| १ | कुक् | ३१८ | ४ | कुश् | ६६० | १० | कॄत् | ९२६ |
| १ | कुच् | ५६ | ९ | कुष् | ८८२ | १० | केत् | १०४७ |
| १ | कुच् | ५२५ |  | कुषुभ् | ११४८ | १ | केप् | ३८९ |
| ६ | कुच् | ८९५ | ४ | कुस् | ६६९ | १ | केल् | २३० |
| १ | कुज् | ७६ | १० | कुस्म् | १०२६ |  | केला | ११४४ |
| १ | कुञ्च् | ५७ | १० | कुह् | १०७८ | १ | केव् | ४२२ |
| ६ | कुट् | ७९३ | ६ | कू | ८११ | १ | कै | २४ |
| १० | कुट् | १०११ | १ | कूज् | ८१ | १ | क्नथ् | ५६८ |
| १० | कुट् | ९०० | १० | कूट् | १०१८ | ४ | क्नस् | ६४२ |
| ६ | कुड् | ८०२ | १० | कूट्ट् | १०३८ | ९ | क्नु | ८५१ |
| ६ | कुण् | ७६२ | १० | कूण् | १०१९ | १ | क्नूय् | ४१३ |
| १० | कुण् | १०४६ | १ | कूर्द् | ३७७ | १ | क्मर् | २११ |
| १ | कुण्ट् | १०६ | १ | कूल् | २२० | १ | क्रथ् | ५६६ |
| १ | कुण्ठ् | ११८ | १ | कृ | ४६१ | १० | क्रथ् | १०९९ |
| १ | कुण्ड् | ३५४ | ५ | कृ | ७१९ | १ | क्रन्द् | १६५ |
| १० | कुण्ड् | ९१६ | ६ | कृड् | ८०१ | १ | क्रन्द् | ५५१ |
| १० | कुत्स् | १०१५ | ६ | कृत् | ७४१ | १० | क्रन्द् | ९७७ |
| ४ | कुथ् | ६३३ | ७ | कृत् | ८३० | १ | क्रप् | ५५३ |
| १ | कुन्थ् | १५१ | ५ | कृन्व् | ७२८ |  |  |  |

| ग० | धा० ना० | धा० र० प० |
|---|---|---|
| १ | क्रमु | २०१ |
| ९ | क्री | ८४४ |
| १ | क्रीड् | १२७ |
| १ | क्रुञ्चू | ५६ |
| ४ | क्रुधू | ६४९ |
| १ | क्रुशू | ५३७ |
| १ | क्लथ् | ५६६ |
| १ | क्लन्दू | १६५ |
| १ | क्लन्दू | ५५२ |
| ४ | क्लमु | ६७९ |
|  | क्लवू | ११२५ |
| ४ | क्लिदू | ६४७ |
| १ | क्लिन्दू | १६६ |
| १ | क्लिन्दू | ३७३ |
| ४ | क्लिशू | ७०३ |
| ९ | क्लिशू | ८९८ |
| १ | क्लीबृ | ३९६ |
| १ | क्लेशू | ४२८ |
| १ | क्वणू | १४१ |
| १ | क्वथू | ५२६ |
| १ | क्वेलू | २३० |
|  | क्ष |  |
| १ | क्षञ्जू | ५४८ |
| १० | क्षञ्जू | ८९३ |
| ८ | क्षणू | ८३७ |
| १० | क्षपू | १०५४ |
| १ | क्षमू | ४०६ |
| ४ | क्षमू | ६७८ |
| १० | क्षम्पू | ९३५ |
| १ | क्षर् | ५३० |
| १० | क्षलू | ९४७ |
| १ | क्षि | १० |
| ६ | क्षि | ७४४ |
| ९ | क्षि | ८७० |
| ८ | क्षिणू | ८३८ |
| ४ | क्षिपू | ६३६ |
| ६ | क्षिपू | ७३३ |
| १ | क्षिवू | २३९ |
| ४ | क्षिवू | ६४० |
|  | क्षी | ११२५ |
| १ | क्षीज | ८१ |
| १ | क्षीवू | ३९६ |
| २ | क्षु | ५८३ |
| ७ | क्षुदू | ८१३ |
| ४ | क्षुधू | ६४८ |
| १ | क्षुभू | ५१७ |
| ४ | क्षुभू | ६५८ |
| ९ | क्षुभू | ८७६ |
| ६ | क्षुरू | ७७६ |
| १ | क्षै | २७ |
| २ | क्ष्णु | ५८२ |
| १ | क्ष्मायू | ४१४ |
| १ | क्ष्मील | २१७ |
| १ | क्ष्मीवू | १५७ |
| १ | क्ष्विदू | ५१५ |
| ४ | क्ष्विदू | ६४८ |
|  | ख |  |
| १ | खजू | ७९ |
| १ | खञ्जू | ७९ |
| १ | खटू | ९९ |
| १० | खट्ट | ९०६ |
| १० | खडू | ९१५ |
| १ | खण्डू | ३५३ |
| १० | खण्डू | ९१५ |
| १ | खदू | १५५ |
| १ | खनू | ४८६ |
| १ | खर्जू | ७८ |
| १ | खर्दू | १६० |
| १ | खर्बू | १८७ |
| १ | खर्वू | २३७ |
| १ | खलू | २३२ |
| ९ | खवू | ८७८ |
| १ | खादू | १५४ |
| १ | खि | ९५ |
| ४ | खिदू | ६९४ |
| ६ | खिदू | ७४२ |
| ७ | खिदू |  |
| १ | खुज् | ७६ |
| १ | खुण्डू | ३५४ |
| ६ | खुरू | ७७६ |
| १० | खेट्ट | १०३९ |
| १ | खेलू | २३१ |
|  | खेला | ११४५ |
| १ | खेवू | ४२३ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| १ | खै | २६ |
| १० | खोट्ट | १०४० |
| १ | खोड्ड | १३१ |
| १ | खोर् | २१४ |
| १ | ख्या | ५७६ |
| | ग | |
| १ | गग्घ् | ५३ |
| १ | गज् | ९४ |
| १० | गज् | ८९४ |
| १ | गञ्ज् | ८८ |
| १ | गड् | ५६१ |
| १० | गण् | १०४५ |
| १ | गण्ड् | १२२ |
| १ | गद् | १५६ |
| १० | गद् | १०५० |
| | गद्गद | ११५० |
| १० | गन्ध् | १०२२ |
| १ | गम् | २०६ |
| १ | गर्ज् | ८७ |
| १० | गर्द् | ९३१ |
| १० | गर्ध् | ९३२ |
| १ | गर्ब् | १८७ |
| १ | गर्व् | २३८ |
| १० | गर्व् | १०७७ |
| १ | गर्ह् | ४४३ |
| १० | गर्ह् | ११२० |
| १ | गल् | २३३ |
| १ | गल्भ् | ३३९ |
| १ | गल्ह् | ४४४ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| १० | गवेष् | १०६८ |
| १ | गा | ३०२ |
| ३ | गा | ६२७ |
| १० | गात्र् | १०६० |
| १ | गाध् | ३८२ |
| १ | गाह् | ४४९ |
| १ | गु | ३०४ |
| ६ | गु | ७९३ |
| १ | गुज् | ८२ |
| ६ | गुज् | ७९६ |
| १ | गुञ्ज् | ८२ |
| ६ | गुड् | ८०२ |
| १० | गुण् | १०४६ |
| १० | गुण्ड् | ९१७ |
| १० | गुण्ठ् | ९१२ |
| १ | गुद् | ३७८ |
| ४ | गुध् | ६३४ |
| ९ | गुध् | ८७५ |
| १ | गुप् | १७३ |
| १० | गुप् | १००१ |
| १ | गुप् | ३९३ |
| ४ | गुप् | ६५४ |
| ६ | गुफ् | ७७१ |
| ६ | गुम्फ् | ७७२ |
| ६ | गुर् | ८१२ |
| १ | गुह् | ५०८ |
| ४ | गूर् | ७०० |
| १० | गूर्द् | १०२७ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| १ | गूर्द् | ३७८ |
| १० | गूर्द् | ९३० |
| १ | गूर्व् | २४७ |
| १ | गृ | १५ |
| १ | गृज् | ८८ |
| १ | गृञ्ज् | ८९ |
| ४ | गृध् | ६५१ |
| १० | गृह् | १०७८ |
| ६ | गॄ | ७४६ |
| ९ | गॄ | ८६८ |
| १० | गॄ | १०१० |
| १ | गेपृ | ३९१ |
| १ | गेवृ | ४२३ |
| १ | गेषृ | ४२४ |
| १ | गै | २४ |
| | गोषां | ११४५ |
| १ | गोपाय् | १७३ |
| १० | गोम् | १०५५ |
| १ | गोष्ट् | ३४५ |
| १ | ग्रन्थ् | ३७० |
| ९ | ग्रन्थ् | ८७४ |
| १० | ग्रन्थ् | १०९९ |
| १ | ग्रस् | ४४० |
| १० | ग्रस् | ९८८ |
| ९ | ग्रह् | ८५४ |
| १ | ग्रुच् | ६४ |
| १ | ग्लस् | ४४१ |

| ग० | धा० ना० | धा०र०प० |
|---|---|---|
| १ | ग्लह् | ४५० |
| १ | ग्लुच् | ६३ |
| १ | ग्लुञ्च् | ६३ |
| १ | ग्लेप् | ३९१ |
| १ | ग्लेब् | ४२४ |
| १ | ग्लै | २१ |
| | घ | |
| १ | घंस् | ४४१ |
| १ | घट् | ५४८ |
| १० | घट् | ९७२ |
| १० | घट् | ९९८ |
| १ | घट्ट् | ६४३ |
| १० | घट्ट् | ९०५ |
| १० | घण्ट् | ९९८ |
| १ | घस् | २७९ |
| १ | घिण्ण् | ३६२ |
| १ | घु | ३०५ |
| १ | घुंष् | ४३४ |
| १ | घुट् | ५१२ |
| ६ | घुट् | ७९७ |
| १ | घुण् | ३६३ |
| ६ | घुण् | ७६३ |
| १ | घुण्ण् | ३६२ |
| ६ | घुर् | ७७७ |
| १ | घुष् | २५५ |
| १० | घुष् | ९८४ |
| ४ | घूर् | ६९९ |
| १ | घूर्ण् | ३६४ |
| ६ | घूर्ण् | ७६३ |
| १ | घृ | १५ |
| ३ | घृ | ६२२ |
| १० | घृ | ८८६ |
| ८ | घृण् | ८४१ |
| १ | घृण्ण् | ३६३ |
| १ | घृष् | २७४ |
| १ | घ्रा | ७ |
| | ङ | |
| १ | ङु | ३०५ |
| | च | |
| १ | चक् | ३१९ |
| १ | चक् | ५५५ |
| २ | चकास् | ५८८ |
| १० | चक्क् | ८८८ |
| २ | चक्ष् | ६०३ |
| १ | चञ्च् | ५९ |
| १० | चट् | ९७१ |
| १ | चण् | १४२ |
| १ | चण् | ५६३ |
| १ | चण्ड् | ३५८ |
| १० | चण्ड् | ९२० |
| १ | चत् | ४७२ |
| १ | चद् | ४७६ |
| १ | चन् | १७० |
| १ | चन् | ५६७ |
| १ | चन्द् | १६३ |
| १ | चप् | १७७ |
| १ | चम् | १९८ |
| १ | चय् | ४१० |
| १ | चर् | २१३ |
| १० | चर् | ९८१ |
| १० | चर्च् | ९६९ |
| १ | चर्ब् | १८८ |
| १ | चर्व् | २३४ |
| १ | चल् | ५३० |
| १ | चल् | ५६८ |
| ६ | चल् | ७८३ |
| १० | चल् | ९५४ |
| १ | चष् | २६६ |
| १ | चष् | ५०१ |
| १ | चह् | २८४ |
| १० | चह् | १०७० |
| १ | चाय् | ४९० |
| ५ | चि | ७१५ |
| १ | चिकित्स् | १५० |
| १ | चिट् | १०२ |
| १ | चित् | १४५ |
| १० | चित् | १०२१ |
| १० | चिन्त् | ९२४ |
| १० | चित्र् | १०६१ |
| ६ | चिल् | ७८३ |
| १ | चिल्ल् | २२३ |
| १० | चीक् | १०८८ |
| १ | चीव् | ४९४ |
| १० | चीव् | १००२ |

| ग० | धा- ना० | धा-र-पृ० | ग० | धा- ना० | धा-र-पृ० | ग० | धा- ना० | धा-र-पृ० |
|---|---|---|---|---|---|---|---|---|
| १० | चुक्क् | ८८९ | १ | च्युत् | १४६ | १ | जप् | १७७ |
| १ | चुच्य् | २१० | | छ | | १ | जभ् | १९८ |
| १ | चुट् | १०७ | १ | छद् | ५६७ | १ | जभ् | ४०३ |
| ६ | चुट् | ७९७ | १० | छद् | ९२९ | १ | जम् | १९९ |
| १० | चुट् | ८९८ | १० | छद् | ११०४ | १ | जम्भ् | ४०३ |
| १० | चुट्ट् | ९०१ | १ | छम् | १९९ | १ | जम्भ् | ९८० |
| १ | चुड्ड् | १३५ | १० | छम्प् | ९३४ | ६ | जर्च् | ७४८ |
| ६ | चुण् | ८०८ | १० | छर्द् | ९३१ | ६ | जर्ज् | ७५६ |
| १ | चुण्ट् | १०८ | १ | छष् | ५०२ | १ | जल् | ५३१ |
| १० | चुण्ट् | ८९९ | ७ | छिद् | ८२२ | १० | जल् | ९४७ |
| १० | चुण्ड् | ९१७ | १० | छिद्र् | १०६१ | १ | जल्प् | ५७६ |
| १ | चुत् | १४७ | ६ | छुट् | ७९८ | १ | जष् | २६२ |
| १० | चुद् | ९२९ | १० | छुट् | ८९९ | ४ | जस् | ६७२ |
| १ | चुप् | १७९ | १० | छुण्ट् | ९०० | १० | जस् | ९६० |
| १ | चुम्ब् | १९४ | ६ | छुप् | ७६७ | १० | जस् | ९८६ |
| १० | चुर् | ८८४ | ६ | छुर् | ८०९ | २ | जागृ | ५८७ |
| | चुरण् | ११५३ | ७ | छृद् | ८२४ | १ | जि | १० |
| १ | चुल्ल् | २२३ | १० | छृद् | ११०६ | १ | जिन्व् | २५० |
| | चुलुम्प् | ११५७ | १० | छेद् | १०४९ | १ | जिम् | २०० |
| १० | चूण् | ९२२ | ४ | छो | ६३१ | १ | जिष् | २६८ |
| ४ | चूर् | ७०२ | | ज | | १ | जीव् | २३९ |
| १० | चूर्ण् | ९२१ | १० | जंस् | ९५८ | १ | जु | ३०७ |
| १ | चूष् | २५६ | २ | जक्ष् | ५८६ | | जु | ११३० |
| ६ | चृत् | ७६४ | १ | जज् | ८५ | १ | जुगुप्स् | ३९३ |
| १ | चेल्ल् | २२९ | १ | जञ्ज् | ८६ | १ | जुङ्ग् | ५२ |
| १ | चेष्ट् | ३४४ | १ | जट् | ९७ | ६ | जुड् | ७५७ |
| १ | च्यु | ३०६ | ३ | जन् | ६२७ | ६ | जुड् | ८०३ |
| १० | च्यु | ९६५ | ४ | जन् | ६९७ | १० | जुड् | ९२० |

| ग० | धा- ना० | धा-र-पृ० |
|---|---|---|
| १ | जुत् | १४८ |
| १ | जुत | ३६६ |
| ६ | जुन् | ७६६ |
| ६ | जुष् | ८१६ |
| १० | जुष् | १११८ |
| ४ | जूर् | ७०१ |
| १ | जूर्वूं | २४४ |
| १ | जूषू | २६७ |
| १ | जृम्भू | ४०४ |
| ४ | जॄ | ६२९ |
| ९ | जॄ | ८६७ |
| १० | जॄ | १०८७ |
| १ | जेषृ | ४३० |
| १ | जेहृ | ४४७ |
| १ | ज | २७ |
| ९ | ज्ञा | ८७० |
| १० | ज्ञा | ९६४ |
| ९ | ज्या | ८६१ |
| १ | ज्यु | ३०६ |
| १ | ज्रि | १० |
| १ | ज्वर् | ५६८ |
| १ | ज्वल् | ५२४ |
| १ | ज्वल् | ५६९ |
| | झ | |
| १ | झट् | ९७ |
| १ | झमू | २०० |
| ६ | झर्झू | ७४८ |
| ६ | झर्झू | ७५६ |
| १ | झषू | २६२ |
| १ | झषू | ४९६ |
| ४ | झॄ | ६२९ |
| | ट | |
| १० | टङ्कू | ८८९ |
| १ | टल् | ५३१ |
| १ | टिलू | ३२५ |
| १ | टीकृ | ३२५ |
| १ | ट्वल् | ५३२ |
| | ड | |
| १० | डप् | १०२२ |
| १० | डम्प् | ९३७ |
| १० | डम्प् | १०२३ |
| १० | डम्ब् | ९३९ |
| १० | डम्भ् | १०१४ |
| ४ | डिप् | ६५६ |
| ६ | डिप् | ८०९ |
| १० | डिप् | ९३६ |
| १० | डिप् | १०२३ |
| १० | डिम्प् | ९३७ |
| १० | डिम्प् | १०२४ |
| १० | डिम्ब् | ९३९ |
| १० | डिम्भ् | १०२५ |
| १ | डी | ३०३ |
| ४ | डी | ६८९ |
| | ढ | |
| १ | ढौकृ | ३२२ |
| | त | |
| १ | तंस् | २७६ |
| १० | तंसू | ९८६ |
| १ | तक्कु | ३१ |
| १ | तक्षू | २९३ |
| १ | तङ्कू | ३१ |
| १ | तङ्गू | ४६ |
| १ | तञ्चू | ६० |
| ७ | तञ्चू | ८२७ |
| ७ | तञ्जू | ८२७ |
| १ | तट् | ९९ |
| १० | तड् | ९१४ |
| १० | तण्ड् | ३५२ |
| ८ | तन् | ८३५ |
| १० | तन् | ११०८ |
| १० | तन्त्र् | १०२७ |
| १ | तप् | १७४ |
| ४ | तप् | ६९८ |
| १० | तप् | १११० |
| | तपुस् | ११५४ |
| ४ | तम् | ६७६ |
| | तम्पस | ११६५ |
| १ | तय् | ४११ |
| | तरण | ११५० |
| १० | तर्कु | ९९१ |
| १ | तर्जू | ८४ |
| १० | तर्ज् | १०१७ |
| १ | तर्दू | १५९ |
| १ | तर्बु | १८८ |

| ग० | धा- ना० | धा-र-प० | ग० | धा- ना० | धा-र प० | ग० | धा- ना० | धा-र-प० |
|---|---|---|---|---|---|---|---|---|
| १० | तल् | ९४९ | १ | तुण्ड् | ३५७ | ७ | तृद् | ८२५ |
| ४ | तस् | ६७२ | ६ | तुड् | ७३१ | ४ | तृप् | ६५२ |
| १ | ताय् | ४१५ | १ | तुप् | १७९ | ५ | तृप् | ७२७ |
| १ | तिक् | ३२५ | १ | तुफ् | १८२ | १० | तृप् | ११११ |
| ५ | तिक् | ७२४ | १ | तुभ् | ५१८ | ६ | तृफ् | ७६८ |
| ५ | तिग् | ७२४ | ४ | तुभ् | ६५९ | ६ | तृम्फ् | ७१९ |
| १ | तिज् | ३४३ | ९ | तुभ् | ८७७ | ४ | तृष् | ६६५ |
| १० | तिज् | ८९५ | १ | तुम्प् | १८० | ६ | तृह् | ७९१ |
| १ | तिप् | ३८७ | १ | तुम्फ | १८३ | ७ | तृह् | ८३३ |
| ४ | तिम् | ६३७ | १ | तुम्ब् | १९३ | १० | तृह् | ९७४ |
|  | तिरस् | ११३७ | १० | तुम्ब् | ९४३ | १ | तॄ | २९ |
| १ | तिल् | २२७ | ३ | तुर् | ६२५ | १ | तेप् | ३८८ |
| ६ | तिल् | ७८२ |  | तुरण् | ११५२ | १ | तेव् | ४२० |
| १० | तिल् | ९४६ | १० | तुल् | ९४९ | १ | तोड् | १२९ |
| १ | तिल्ल् | २२७ | ४ | तुष् | ६६५ | १ | तौड् | १२७ |
| ४ | तीम् | ६३७ | १ | तुस् | २७७ | १ | त्यज् | ९२ |
| १० | तीर् | १०५९ | १ | तुह् | २८८ | १० | त्रंस् | १००४ |
| १ | तीव् | २४१ | १ | तूड् | १२८ | १ | त्रङ्क् | ३२१ |
| २ | तु | ५८० | १० | तुण् | ९२२ | १ | त्रन्द् | १६४ |
| १ | तुज् | ८६ | १० | तूण् | १०२० | १ | त्रप् | ३९१ |
| १ | तुञ्ज् | ८७ | १० | तूण् | १०४५ | ४ | त्रस् | ६४२ |
| १० | तुञ्ज् | ८९२ | ४ | तूर् | ७०२ | १० | त्रस् | ९८७ |
| १० | तुञ्ज् | ९९४ | १ | तूव् | २४२ | ६ | त्रुट् | ७९८ |
| ६ | तुड् | ७९९ | १ | तूल् | २२१ | १० | त्रुट् | १०१८ |
| १० | तुट् | ८९८ | १ | तूष् | २५६ | ६ | त्रुड् | ८०८ |
| १ | तुड् | १२८ | ६ | तृंह् | ७९१ | १ | त्रुप् | १८१ |
| ६ | तुड्ड् | ८०३ | १ | तृक्ष् | २९५ | १ | त्रुफ् | १८३ |
| ६ | तुण् | ७६० | ८ | तृण् | ८४० |  |  |  |

| ग० | धा० ना० | धा-र-प० | ग० | धा० ना० | धा-र प० | ग० | धा० ना० | धा-र प० |
|---|---|---|---|---|---|---|---|---|
| १ | त्रुम्प् | २८१ | ४ | दप् | ६७६ | ५ | दु | ७२२ |
| १ | त्रुम्फ् | १८४ | ५ | दम्भ् | ७२८ | १० | दुःख | १०३२ |
| १ | त्रै | ३११ | २० | दम्भ् | ९४० | | दुःख् | ११४९ |
| १ | त्रौकृ | ३२३ | १ | दय् | ४१२ | ६ | दुड् | ८०७ |
| १ | त्वक्ष् | २९४ | २ | दरिद्रा | ५८७ | | दुरज् | ११४१ |
| १ | त्वक्ष् | २९७ | १ | दल् | २१५ | १० | दुल् | ९५० |
| १ | त्वङ्गं | ८१ | १० | दल् | ९८२ | | दुवस् | ११४० |
| ६ | त्वच् | ७४९ | ४ | दस् | ६७३ | ४ | दुष् | ६६३ |
| १ | त्वञ्च् | ६० | १ | दह् | २८३ | १ | दुह् | २८१ |
| १ | त्वर् | ५५३ | १ | दा | ९ | २ | दुह् | ६०९ |
| १ | त्विष् | ५०३ | २ | दा | ५७५ | ४ | दू | ६८६ |
| १ | त्सर् | २११ | ३ | दा | ६१६ | १ | दुर्व् | २४३ |
| | थ | | १ | दाघ् | ३३१ | १ | दृंह् | २८६ |
| ६ | थुड् | ८०४ | १ | दान् | ४८७ | ६ | दृड् | ८१३ |
| १ | थुर्व् | २४३ | १ | दाश् | ४९५ | ४ | दृप् | ६५३ |
| | द | | १ | दास् | ५०६ | ६ | दृफ् | ७७० |
| १ | दंश् | २५५ | १ | दिन्व् | २५० | ६ | दृभ् | ७७४ |
| १० | दंश् | १००३ | १० | दिम्भ् | ९४१ | १० | दृभ् | १११३ |
| १० | दंश् | १०२९ | ४ | दिव् | ६२८ | ६ | दृम्फ् | ७७१ |
| १० | दंस् | १००५ | १० | दिव् | ९८२ | १ | दृश | २५४ |
| १० | दंस् | १०३० | १० | दिव् | १०१४ | १ | [illegible] | २८६ |
| १ | दक्ष् | ४५२ | ६ | दिश् | ७३४ | १ | [illegible] | ५५४ |
| १ | दक्ष् | ५५४ | २ | दिह् | ६१० | ९ | [illegible] | ८६७ |
| १ | दङ्घ् | ५४ | ४ | दी | ६८६ | १ | दे | ३११ |
| १० | दण्ड् | १०४२ | १ | दीक्ष् | ४५५ | १ | देव् | ४२१ |
| १ | दध् | ३७४ | १ | दीदांस् | ४८७ | १ | दै | २० |
| १ | दध् | ३८३ | ४ | दीप् | ६९८ | | दो | ६३१ |
| १० | दभ् | ९४० | १ | दु | ११ | २ | द्यु | ५७९ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| १ | द्युत् | ५११ |
| १ | द्यै | २२ |
| १ | द्रम् | २०५ |
| २ | द्रा | ५७३ |
| १ | द्राखृ | ३५ |
| १ | द्राङ्क्षृ | ३०० |
| १ | द्राघृ | ३३१ |
| १ | द्राडृ | ३५८ |
| १ | द्राहृ | ४४८ |
| १ | द्रु | १२ |
| ६ | द्रुण् | ७६१ |
| ४ | द्रुह् | ६८० |
| ९ | द्रूञ् | ८५३ |
| १ | द्रेकृ | ३१६ |
| १ | द्रै | २३ |
| २ | द्विष् | ६०८ |
| १ | द्वृ | १६ |
| | ध | |
| १० | धक्क | ८८८ |
| १ | धण् | १०४ |
| १ | धन् | १६९ |
| ३ | धन् | ६२६ |
| १ | धन्व् | २३६ |
| ३ | धा | ६१७ |
| १ | धावु | ४९३ |
| ६ | धि | ७४४ |
| १ | धिक्षु | ४५३ |
| ५ | धिन्व् | ७२९ |
| ३ | धिष् | ६२६ |
| ४ | धी | ६८७ |
| १ | धुक्ष् | ४५२ |
| ५ | धु | ७१६ |
| ६ | धु | ७९५ |
| ९ | धु | ८५७ |
| १० | धू | १०८४ |
| १ | धूप् | १७४ |
| १० | धूप् | १००१ |
| ५ | धूपाय् | १७४ |
| ४ | धूर् | ७०१ |
| १ | धूर्व् | २४४ |
| १० | धूश् | ९५५ |
| १ | धृ | ३१० |
| १ | धृ | ४६० |
| ६ | धृ | ८१३ |
| १ | धृज् | ७१ |
| १ | धृञ्ज् | ७१ |
| ५ | धृष् | ७२९ |
| १० | धृष् | १११७ |
| १ | धे | १९ |
| १ | धोर् | २१४ |
| १ | ध्मा | ८ |
| १ | ध्यै | २० |
| १ | ध्रज् | ७३ |
| १ | ध्रञ्ज् | ७३ |
| १ | ध्रण् | १४१ |
| ९ | ध्रस् | ८८३ |
| १० | ध्रस् | ९८८ |
| १ | ध्राखृ | ३५ |
| १ | ध्राङ्क्ष | ३०० |
| १ | ध्राडृ | ३५९ |
| १ | ध्रु | १३ |
| ६ | ध्रु | ७९४ |
| १ | ध्रेकृ | ३१६ |
| १ | ध्रै | २३ |
| १ | ध्वंस् | ५२० |
| १ | ध्वज् | ७२ |
| १ | ध्वञ्ज् | ७२ |
| १ | ध्वण् | १४० |
| १ | ध्वन् | १७० |
| १ | ध्वन् | ५६७ |
| १० | ध्वन् | १०५० |
| १ | ध्वाङ्क्ष | ३०१ |
| १ | ध्वृ | १७ |
| | न | |
| १० | नक्क | ८८७ |
| १ | नक्ष् | २९६ |
| ५ | नख | ३८ |
| १ | नख | ३८ |
| १ | नट् | १०० |
| १ | नट् | ५६० |
| १ | नट् | ८९७ |
| १ | नद् | १५७ |
| १० | नद् | १००० |
| १ | नन्द् | १६३ |

| ग० | धा-ना० | धा-र-पृ० | ग० | धा-ना० | धा-र-पृ० | ग० | धा-ना० | धा-र-पृ० |
|---|---|---|---|---|---|---|---|---|
| १ | नभू | ५१७ | १० | निष्कू | १०१७ | १० | पदू | १०७४ |
| ४ | नभू | ६५८ | १ | नी | ४५७ | १ | पनू | ३८५ |
| ९ | नभू | ८७७ | १ | नीलृ | २८१ | १ | पनायू | ३८५ |
| १ | नमू | २०३ | १ | नीवृ | २४१ | १० | पन्थू | ९२७ |
| १ | नयू | ४१० | २ | नु | ५८१ | १ | पयू | ४०९ |
| १ | नयू | ४१२ | ६ | नुदृ | ७६४ | | पयसू | ११३९ |
| १ | नर्दु | १५८ | ६ | नू | ७९४ | १० | पर्ण | १०४४ |
| १ | नर्दु | १५९ | ४ | नृतू | ६३३ | १ | पर्दु | ३८० |
| १ | नर्बु | १८९ | १ | नॄ | ५५४ | १ | पर्बु | १८९ |
| १ | नलू | ५३३ | ९ | नॄ | ८६८ | १ | पर्वु | २३५ |
| ४ | नशू | ६५९ | १ | नेदृ | ४७९ | १ | पर्षु | ४३३ |
| १ | नसू | ४३९ | १ | नेषृ | ४३१ | १ | पलू | ५३५ |
| ४ | नह | ७१० | | **प** | | १० | पलू | ९५३ |
| १ | नाथू | ३६८ | १० | पंसू | ९५७ | १ | पल्लू | २२८ |
| १ | नाथू | ३६९ | १० | पक्षू | ९६२ | १० | पल्युलू | १०६६ |
| १ | नाधू | ३८५ | १ | पचू | ४६५ | १ | पवू | ४२७ |
| १ | नासृ | ४३८ | ११ | पञ्चू | ३३७ | १० | पशू | ९८३ |
| २ | निंसू | ६०३ | १० | पञ्चू | ८९१ | १ | पषू | ४९९ |
| १ | निक्षू | २९५ | १ | पटू | १०४ | १० | पषू | ९८३ |
| ३ | निजू | ६१९ | १० | पटू | ९९६ | १० | पषू | १०६७ |
| २ | निञ्जू | ५९७ | १० | पटू | १०३८ | १ | पा | ७ |
| १ | निदू | ४७८ | १ | पठू | ११२ | २ | पा | ५७४ |
| १ | निन्दु | १६२ | १ | पणू | ३६४ | १० | पारू | १०५९ |
| १ | निन्बू | २४८ | १ | पण्डू | ३५० | १० | पिंसू | १००४ |
| १० | निरश्च | ९७५ | १ | पतू | ५२५ | ६ | पि | ७४३ |
| ६ | निलू | ७८५ | १० | पतू | १०४७ | १० | पिच्चू | ८९० |
| १० | निवासू | १०७० | १ | पथू | ५२५ | २ | पिञ्जू | ५९६ |
| १ | निशू | २५४ | ४ | पदू | ६९३ | १० | पिञ्जू | ८९३ |
| १ | निषू | २७१ | | | | | | |

| ग० | धा० ना० | धा-र-पृ० | ग० | धा० ना० | धा-र-पृ० | ग० | धा० ना० | धा-र-पृ० |
|---|---|---|---|---|---|---|---|---|
| १० | पिञ्जू | ९९४ | १ | पुलू | ५३४ | ६ | पृड् | ७५९ |
| १ | पिट् | ९८ | १० | पुल् | ९४८ | ६ | पृण् | ७५८ |
| १ | पिठ् | ११६ | १ | पुष् | २७५ | १० | पृथ् | ९२८ |
| १ | पिण्ड् | ३५१ | ४ | पुष् | ६४५ | १ | पृषू | २७० |
| १० | पिण्ड् | ९१९ | ९ | पुषू | ८८२ | ३ | पॄ | ६१४ |
| १ | पिन्वू | २४८ | १० | पुष् | ९८४ | ९ | पॄ | ८६९ |
| १० | पिल् | ९५२ | ४ | पुष्पू | ६३६ | १ | पेलृ | २२४ |
| ६ | पिशू | ७४२ | ४ | पुस् | ६६८ | १ | पेय् | ४२४ |
| ७ | पिषू | ८३२ | १० | पुस्त् | ९२४ | १ | पेसृ | २८१ |
| १ | पिसृ | २८० | १ | पू | ३०९ | १ | पै | २९ |
| १० | पिस् | ९५९ | ९ | पू | ८५५ | १ | पैण् | १४५ |
| ४ | पी | ६९० | १० | पूज् | ८९४ | १ | प्याय् | ४१५ |
| १० | पीड् | ९१४ | ६० | पूण् | ९२३ | ४ | प्युष् | ६६७ |
| १ | पीलृ | २१८ | १ | पूय् | ४१३ | १० | प्युष् | ९५७ |
| १ | पीवू | २४० | ४ | पूरी | ६९९ | ४ | प्युस् | ६४३ |
| १० | पुंस् | ९५८ | १० | पूर् | ९८१ | ४ | प्युस् | ६६८ |
| ६ | पुड् | ८०० | १० | पूर्ब् | ९४३ | १ | प्यै | ३१२ |
| १० | पुट् | ९०२ | १ | पूर्व् | २३४ | ६ | प्रच्छ् | ७१३ |
| १० | पुट् | ९९७ | १ | पूलृ | २२१ | १ | प्रथ् | ५४९ |
| १० | पुट् | १०४० | १ | पूष् | २५७ | १० | प्रथ् | ९२८ |
| १० | पुट्ट | ९०१ | ३ | पॄ | ६१४ | १ | प्रस् | ५५३ |
| ६ | पुण् | ७६१ | ५ | पृ | ७२२ | २ | प्रा | ५७६ |
| १ | पुण्ड् | १ ० | ६ | पॄ | ८१२ | ४ | प्री | ६९१ |
| ४ | पुथ् | ६३४ | १० | पृ | ८८५ | ९ | प्री | ८४६ |
| १० | पुथ् | ९९९ | २ | पृच् | ५९५ | १० | प्री | १०८२ |
| १ | पुन्थ् | १५२ | ७ | पृचू | ८२६ | १ | प्रु | ३०७ |
| ६ | पुर् | ७७७ | १० | पृच् | १०९१ | १ | प्रुष् | २७१ |
|  | पुरण् | ११५२ | २ | पृञ्ज् | ५९६ | ९ | प्रुष् | ८८० |

| ग० | धा० ना० | धा०र० प० |
|---|---|---|
| १ | प्रेङ्खोल् | ११५७ |
| १ | प्रोथ् | ४७३ |
| १ | प्लिहू | ४४३ |
| ९ | प्ली | ८६३ |
| १ | प्लु | ३०८ |
| १ | प्लुष् | २७४ |
| ४ | प्लुष् | ६६४ |
| ९ | प्लुष् | ८८१ |
| १ | प्लेवृ | ४२५ |
| २ | प्सा | ५७० |
| | फ | |
| १ | फक्क् | ३० |
| १ | फण् | ५६३ |
| १ | फल | २१९ |
| १ | फल् | २२२ |
| १ | फुल्ल् | २२२ |
| १ | फेल् | २२४ |
| | ब | |
| १ | बंहू | ४५१ |
| १ | बण् | १३८ |
| १ | बद् | १५५ |
| १ | बध् | ३८४ |
| १० | बध् | ९३४ |
| ९ | बन्धू | ८७६ |
| १० | बन्धू | ९३३ |
| १ | बभ्र् | २१२ |
| १ | बर्बू | १८० |
| १ | बर्हू | ४४२ |

| ग० | धा० ना० | धा०र० प० |
|---|---|---|
| १० | बर्हू | ९६० |
| १ | बल् | ५३४ |
| १० | बल् | १०१३ |
| १ | बल्ह् | ४४६ |
| १ | बाधृ | ३८३ |
| ६ | बिल् | ७८४ |
| १० | बिल् | ९४८ |
| १ | बीभत्स् | ३८४ |
| १ | बुक्क् | ३२ |
| १० | बुक्क् | ९६६ |
| १ | बुध् | ४८५ |
| १ | बुद् | ४२८ |
| ४ | बुध् | ६९६ |
| १ | बुन्द् | ४७७ |
| १० | बुन्ध् | ९३२ |
| १० | बुल् | ९५० |
| १० | बुस्त् | ९२५ |
| ९ | बृह् | ८६६ |
| २ | ब्रू | ६०७ |
| १० | बूस् | ९५९ |
| १० | ब्लेष्क् | १०३३ |
| | भ | |
| १० | भक्ष् | ९६२ |
| १ | भ | ४६८ |
| १० | भज् | ९७१ |
| ७ | भञ्ज् | ८२८ |
| १० | भञ्ज् | ९९६ |
| १ | भट् | ९८ |

| ग० | धा० ना० | धा०र० प० |
|---|---|---|
| १ | भट् | ५६० |
| १ | भण् | १३८ |
| १ | भण्ड् | ३५६ |
| १० | भण्ड् | ९१८ |
| १ | भन्द् | ३७२ |
| | भरण् | ११५४ |
| १० | भर्त्स् | १०३० |
| १ | भर्भ् | १९६ |
| १ | भर्व् | २४५ |
| १ | भल् | ४१८ |
| १ | भल् | १०१३ |
| १ | भल्ल् | ४१९ |
| १ | भष् | २६८ |
| ३ | भस् | ६२४ |
| २ | भा | ५७१ |
| १० | भाज् | १०३६ |
| १ | भाम् | ४०५ |
| १० | भाम | १०५५ |
| १ | भाष् | ४२८ |
| १ | भास् | ४३५ |
| १ | भिक्ष् | ४५४ |
| ७ | भिद् | ८२१ |
| | भिषज् | ११४१ |
| | भिष्णुक् | ११४२ |
| ३ | भी | ६१३ |
| ६ | भुज् | ७५५ |
| ७ | भुज् | ८२८ |

